फलप्राप्ति प्रतिपादने, यद्वा-उपासनाकारभेदमात्रायत्ताधिकारि द्वैविध्या
भिप्राये वा दर्शितश्रुती, इत्यनयो कतरश्रुत्योदाहरणीयया निर्वाहाभ्युपगमेन
परब्रह्मोपासकमात्र विषयमेव गतिशास्त्रमिति मन्यमानस्य जैमिनेर्वा कार्य
ब्रह्मोपासक विषयमेव गतिशास्त्र मिति मन्यमानस्य बादरेर्वा पक्षआश्रयि
तु सुचित , यद्वा-अङ्गाङ्गिभावानवच्छिन्न भिन्नप्राप्योपासनपर द्विविधोपा
सकपरत्वेपि छान्दोग्य श्रुत्यो रुक्तलक्षण पञ्चाग्निवित् सादृश्येणा र्चिरादि
पथगामितया निर्दिष्टा अन्ये हिरण्यगर्भलक्षण कार्यब्रह्मोपासकाएवा गीकर्तुं
सुचिता , अवान्तरभेदे प्युभयेषाम प्युपास्यवच्छिन्न ब्रह्मलक्षण कार्यब्रह्मो
पासक त्वाविशेषेण सादृश्येन निर्देशौचित्यात , प्रश्नोपनिषत्पञ्चमप्रश्ने-
एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कार इत्यत्र कार्यब्रह्मपरेणापरब्रह्म
शब्देन प्रकृतिमण्डलान्तःपाति कृतस्य निर्देशा दर्चिरादिमिश्र प्र
त्यगात्मनोरि तदन्वयाविस्या वर्णनीयतया तदुपासकानां पञ्चाग्निविदा
कार्यब्रह्मोपासकत्वहि स्पष्ट , अर्चिरादिपथगामिना कार्यब्रह्मोपा
सकपरत्वे गतिशास्त्र तथा द्विविधत्वनिर्देश उपपद्यते, प्राप्यस्य
कार्यब्रह्मणो नानात्वेन तदुपासकानामपि नानाविधत्वसम्भवात् , पर
ब्रह्मोपासकत्वेतु तथा तथाविध निर्देशो न सङ्गच्छतएव , सकलो
पाधिविनिर्मुक्तस्य परस्यब्रह्मण एकरूपतया तदुपासकानामनेक
विधत्वा सम्भवेन तद्यइत्थंविदु रित्युक्तानामप्येकविध परब्रह्मोपा
सकत्वाभिधाना सम्भवात् , प्राप्यभेद निबन्धनोपासकनानात्वस्यैव -
तद्य इत्थं विदुरित्यादिश्रुतिविवक्षितत्वा दन्यथो पासनाकार भेदमा-
त्रनिबन्धनो पासक नानात्वस्य तद्विवक्षितत्वे अनन्तविधत्वस्यैव लभ
येन द्विविधत्वनिर्देशासम्भवाच्च , तथाच तद्यइत्थंविदु रित्यादि श्रु
त्योरङ्गाङ्गिभावापन्नोपासनपर द्वैविध्य परमप्राप्योपासकविषयत्वेनवा
अङ्गाङ्गिभावानापन्न भिन्नभिन्नप्राप्योपासनपर द्विविधाधिकारिविष-
यत्वेन वा द्वेधापि निर्वाहसम्भवेन कार्योपासकविषयमेव गतिशास्त्रमिति

बादरिपक्ष एव वागीकर्तुमुचित, एवं स्थिते तावेतौ द्वावपि पक्षावुद्देश्य प्र-
तीकालम्बनकोटावेव घटितव्यौ । पूर्वोक्तलक्षणानां पञ्चाग्निविदां, परब्रह्मो
पासकानाञ्चो भयेषा मर्चिरादिपथगामित्वपरतां वर्णनं मसङ्गतमेव,
एतेषां सुदूरपरस्परतारतम्यशालिनां समानस्कन्धवत्साहचर्येणैकपथ
गामित्व निर्देशानौचित्यात्, अविशेषेण ब्रह्मप्राप्त्यपुनरावृत्ति
श्रवणा नुपपत्तेश्चेति वाच्यम् । तत्क्रतुन्यायसञ्चारेण वा-
क्यार्थनिर्णये पूर्वोक्त सर्वदोष परिहार सम्भवात् । एतदुक्तं भवति ।
बादरिपक्ष स्तावत्सुतरा मयुक्त एव, पूर्वोक्तादेव दुरुद्धरादोषस-
ङ्घात, कार्यब्रह्मणो नानात्वेऽपि पञ्चाग्निविं साहचर्येणार्चिरादि
पथगामितया निर्दिष्टाना मन्येषां हिरण्यगर्भलक्षणकार्यब्रह्मोपा
सकत्वेऽपि च भिन्नभिन्नकार्योपासकत्वेना भ्युपगताना ममीषा मु-
भयेषा मविशेषेण स एनान् ब्रह्म गमयतीत्येवं ब्रह्मप्राप्तिश्रवणानुप
पत्तेश्च, नापि दाशतज्ञायो रङ्गाङ्गिभावापन्नोपासनद्वयशालिपरूविधाधिकारि
मात्रविषयत्वाभ्युपगमपक्षो युक्तः, तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा
तप इत्युपासत इत्यादिश्रुतौ ये चेम इत्यत्रोपासकवाचि पदानुपन्धि-
तया समुच्चयचकारेणेह निर्दिष्टोपासकानां तद्य इत्थं विदुरिति पूर्वं
निर्दिष्टपञ्चाग्निविद्भ्यो भेदस्यैव स्फुटं प्रतिपादनेनो भयपा मभिन्न
त्वासिद्धेः, उपासकैक्यस्योपास्यभेदमात्रस्य च विवक्षिते तद्य इत्थं
विदुर्ये इमेऽरण्ये श्रद्धातप इति चोपासत इत्युपास्यवाचि पदा
नुपन्धितयैव चकारश्रवणावश्यकत्वाच्च, किन्तु ना पर्युपासकैक्य
मिह विवक्षितं मभविष्यत्, नाभविष्यदेव तर्हि ये चेम इति पु
नरुपासकवाचि पदश्रवणम्, अभविष्यच्च तद्य इत्थं विदुररण्ये
श्रद्धातप इति चोपासत इत्येवंच श्रवणम्, नचैवं श्रूयते, तस्मा
दुक्ताभ्यां द्वाभ्यां पञ्चद्वाभ्यां चकारपदद्वाभ्यां विभज्य नि-
र्दिष्टा अर्चिरादिपथगामिनो भिन्नभिन्नभेदोपासका इत्यर्थो भिन्न-
भावत्वोपादानादिति स्पष्ट मवगम्यते, तेन पञ्चाग्निविद परं

ब्रह्मोपासकाख्ये त्युक्तोभयविधाय। नचात्र पंचाग्निविदा सुकरीत्या प्रकृतिविमिश्रं प्रत्यगात्मान मुपासीनानां प्रतीकालंबनत्वावश्यंभावेन ब्रह्मप्राप्त्यपुनरावृत्यो रनुपपत्तिः, नाप्यप्रतीकालंबनत्वेन पंचाग्निविद्ब्रह्मविदा मनुगमो ऽनुपपन्नः, अर्चिरादिना गतानां ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणा दमीषां चार्चिरादिगतिश्रवणा त्तत्क्रतुन्यायेन प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानलक्षणोपासनस्यैवा मीषां सिद्धेः, अत एव प्रतीकालंबनत्वायोगाच्च . तत्क्रतुन्यायश्च अथ खलु क्रतुमयः पुरुषो यथाक्रतु रस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवतीति छान्दोग्यतृतीयप्रपाठक चतुर्दशखण्ड प्रथमखण्डिकागतश्रुत्या तं यथायथोपासते तथैव भवतीति श्रुत्याच यथोपासीन स्तथैव प्राप्नोतीत्येव रूपः प्रतिपद्यते , ततश्चो पासनानुरूप मेव फल मुपासकानां सम्भवति नान्यादृशमिति सिद्ध्यति, यदि पुनः ये पचाग्निविदः प्रकृतिविमिश्रं ब्रह्मात्मकत्वाविशेषितम् प्रत्य गात्मान मेव प्राप्यतयो पासीना इतीष्यते , नोपपद्येते एव तर्हि तेषां श्रूयमाणा ब्रह्मप्राप्तिरपुनरावृत्तिश्च , अनुपासितस्य ब्रह्मण. प्राप्त्ययोगात् , उपासितस्य प्राप्तस्य क्षरणशीलाचिन्मिश्रप्रत्यगात्मलक्षण प्राप्यस्य कदाचित क्षरणा वश्यं भावेन पुनरावृत्ते रवर्जनीयत्वाश्च , अत. पंचाग्निविदः प्रकृति वियुक्तं प्रत्यगात्मान ब्रह्मात्मक मुपासीना इत्येव न्यायत स्सिध्यति, प्रत्यगात्मनो ब्रह्मात्मकत्वच यस्यात्माशरीरमित्यादि श्रुतिशतसिद्धम् , पंचाग्निविद्यायां श्रूयमाण भूतसूक्ष्मसम्परिष्वक्तस्यैव सतः प्रत्यगात्मनः द्युलोकपर्जन्यपृथिवीपुरुषयोषारूपेषु पंचस्वग्निषु देव प्राणैर्हूयमानस्य क्रमेण सोमराजाख्यामृतमयदेहिभाव वर्षभावापन्नत्वेनानुसन्धानं ना चिन्मिश्रवेषेण तमुपास्य तथाविधस्येव तस्य प्राप्त्यर्थं विधीयते, अपितु यावदचित्संसर्ग प्रत्यगात्मनः कर्मवशेन पुनःपुन रीदृशरीत्या सर्वकामसमये संसारस्थ परवशपरिभ्रम्य

माणत्वलक्षण दोषदर्शनमुखेन जुगुप्सया सर्वदोषाकर हेया चित्संसर्गस्य परित्याज्यतामनुसन्धाय तादृशाचित्संसर्ग वियुक्तं स्वस्वरूपापन्न प्रत्यगात्मान मुपास्य तथाविधस्यैव तस्य प्राप्त्यर्थं विधीयते, तथाचानुसन्धान-रूपाभिसन्धिभेदेन हानार्थस्योपादानार्थस्यच द्विविधस्य सम्भवा द-चिन्मिश्रस्य प्रत्यगात्मन स्तदतत्संचारित्वानुसन्धान दोषदर्शनविधया परित्यागग्रहणार्थ गुणदर्शनविधया प्रकृतिवियुक्तत्व विशिष्ट प्र-त्यगात्मस्वरूप प्राप्त्यर्थं चेत्यवगम्यते। तदिदं छान्दोग्यपञ्चमप्रपाठक दशमखण्डान्ते पञ्चाग्निविद्याप्रकरणावसाने तस्माज्जुगुप्सेत तदेष श्लोकइत्यारभ्य अथहय एतान् पञ्चाग्नीन् वेद नसहतैरप्याचरन् पाप्मनालिप्यते शुद्धः पूत पुण्यलोकोभवति यएव वेद यएव वेदेत्यन्तेन ग्रन्थेन सुव्यक्त मुपपादितं । अत्र जुगुप्सेतेति प्रकृतिसंसर्ग जुगुप्सया तद्वियुक्त प्रत्यगात्म तत्त्वोपासनं विधाय शुद्धः पूतः पु-ण्यलोकोभवतीति लोकविशेषावच्छिन्न प्रकृतिवियुक्तत्व विशिष्टात्मप्राप्तिलक्षणस्यो पासनफलस्याप्यभिधानात् । इत्थंच पञ्चाग्निविदां प्रकृतितन्मिश्रयोः प्राप्यतयोपासकत्वलक्षणप्रतीकालम्बनत्व विरहा दपुनरावृत्तिश्रवण मुख्यमेवोपपद्यते । हिरण्यगर्भलक्षणकार्य ब्रह्मोपासकस्यतु नामाद्युपासकस्येव प्रतीकालम्बनतायाः तत्क्रतु न्यायेन पुनरावृत्तेश्च वर्जनीयतया नार्चिरादिना गतिर्युक्ता । प-ञ्चाग्निविदामपि ब्रह्मप्राप्तिश्रवणेपि पञ्चाग्निविद्भिः प्रकृतिवियुक्तत्व-विशिष्टप्रत्यगात्मन परब्रह्मोपासकैः परब्रह्मणश्च प्रधानप्राप्यतयोपासनेन तत्क्रतुन्यायेनैव प्राप्यभेदसिध्या प्रधानप्राप्यभेदनिबन्धन मुपासक भेदमभिप्रेत्य गतिशास्त्रे गन्तॄणा द्वेधाविभज्य निर्देशोपि सुसंगतो भवति । नचाय द्विधानिर्देश उपासनाकारभेदमनापन्नाधिकारिद्वैविध्यपर स्सुवचः, तथासति विद्यानामनेकविधत्वेना नेकविधत्वस्यैव गन्तॄणां वक्तव्यतया द्विविधत्वनिरूपणासामञ्जस्यादिति । तस्मा द्वादरि जैमिनि पक्षानुभयत्र दोषयुक्तावेवेति परब्रह्मोपासीनान् प्रकृतिवियुक्त प्राप

गात्मानं ब्रह्मात्मकतदुपासीनान् पञ्चाग्निविदश्च नयत्यतिवाहिकगण इत्येवाङ्गीकार्यमिति ॥ ९९ ॥

पञ्चाग्निविद्याया विहितस्य भूतसूक्ष्मसपरिष्वक्तप्रत्यगात्मव मानुगुण प्रकृतिमण्डल परत्वशवभ्रम्यमाणत्वानुसन्धानस्य दोषदर्शनविधया वैतृष्ण्यजननार्थत्वादेव सूत्रकारेणापि शारीरकशास्त्रे प्रथमे ऽध्यायद्वयेन मुमुक्षूपास्य ब्रह्मस्वरूप निरूप्य तदुप मुपायज्ञानात्तद्रूपास नप्रवृत्तिहेतु प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्य प्राप्यतृष्णा सिध्यर्थं दोषगु णपरामर्शपरयो तृतीयाध्याय प्रथम द्वितीयपादयो. तदन्तरप्रतिपत्त्य धिकरणप्रभृति मुग्धाधिकरण पर्यन्त दोषपरामर्शपर ग्रन्थे प्रथम पञ्चाग्निविद्यैति दर्शिता जीवपरिभ्रमणविशेष एव विचारित ॥१००॥

तदिदमुक्त भाष्यकारैर प्युक्तदोषपरामर्शपर ग्रन्थ कृत्स्नतात्पर्यमनुभाषमाणै रुभयलिङ्गाधिकरण प्रथमसूत्रभाष्ये 'दोषदर्शना द्वैराग्योदयाय जीवस्यावस्थाविशेषा निरूपिता' इति ॥ १०१ ॥

पञ्चाग्निविद्योदिते तत्तत्सञ्चारि प्रकृतिमिश्रप्रत्यगात्मानुसन्धाने प्रकृत्यंशानुसन्धान तस्यहेयतया त्याज्यत्वानुसन्धानरूप, प्रत्यगात्मानुसन्धानच तस्योपादेयतया प्राप्यत्वानुसन्धान रूप, द्युलोकाद्यग्निपञ्चकाधिकरणकाहुतिपञ्चककर्मत्वलक्षणस्य तत्तत्सञ्चारित्वस्यानुसन्धान च भयजननेन तत्परिहारार्थमितिच प्रस्फुटमेव भाषितगीताभाष्ये तैरेव ॥ १०२ ॥

यथोक्त तत्र 'अक्षर ब्रह्मपरम स्वभावोऽध्यात्ममुच्यते । भूतभावोद्भवकरो विसर्गः कर्मसञ्ज्ञित' इति कैवल्यार्थि ज्ञातव्य विषयाष्टमाध्याय तृतीयश्लोकभाष्ये 'परममक्षर - प्रकृतिविनिर्मुक्तात्मस्वरूप, स्वभावोऽध्यात्ममुच्यते, स्वभाव -प्रकृतिः, अनात्मभूतमात्मनि सबध्यमान भूतसूक्ष्मतद्वासनादिकं पञ्चाग्निविद्याया ज्ञातव्यतयोदितम्, तदुभय प्राप्यतया त्याज्यतयाच मुमुक्षुभिर्ज्ञातव्य मिति, 'भूतभावो म-

तुम्यादिभावः, तदुद्भवकरोधो विसर्गः - पंचम्यामाहुतावापः पुरुषव
चसो भवन्तीति श्रुतिसिद्धो योषित्सम्बन्धजः, सकर्मसंज्ञितः- त.
स्याखिलं सानुबन्धं मुद्वेजनीयतया परिहरणीयतयाच मुमुक्षुभिर्ज्ञातव्य'
मितिच ॥ १०३ ॥

अचित्संसर्गायत्त जरामरणादि सर्वावस्थामोक्षलक्षण कैवल्यार्थि
तया गीतातद्भाष्ययोस्तत्र तत्र निर्दिश्यमानोऽधिकारी पंचाग्निविद्वेति-
तुदाहृतश्लोक तद्भाष्याभ्यामेव सुव्यक्तम् ॥ १०४ ॥

र्थः, द्वितीयश्रुतेरपि प्रथमश्रुतिवटकपदसमानार्थक पदभेदमात्रघटि ताया यथोक्तरीत्यैवार्थ, श्रद्धा सत्य मुपासत इत्यत्रापि, सत्यम् ब्रह्म, श्रद्धा - श्रद्धयाऽधिगन्तव्यम्, उपासते - पूर्वोक्तलक्षणां श्र द्धां कृत्वा तयाऽधिगन्तव्यत्वेनो पासत इति पूर्वोक्त एवार्थः पर्यवस्यति । अत्रोभयत्रापि श्रद्धाशब्द श्श्रद्धयाऽधिगन्तव्य औप चारिको द्रष्टव्य । यद्वा- श्रद्धातप इत्युपासत इत्यत्र श्रद्धा तप इतीत्यन्त मुपासनक्रियाकर्मवाचि, तथाच श्रद्धेति श्रद्धास्पद परब्रह्म प्राप्यताध्यवसायपूर्वक तत्प्राप्तित्वरालक्षण ज्ञानविशेष, तप इति तपस्तत्र पर ब्रह्मच, उपासते प्रीत्या समाश्रयन्त इ- त्यर्थ, श्रद्धा सत्य मुपासत इत्यत्रच श्रद्धा सत्य चोपासतइ त्यर्थ, तपश्श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्त । सूर्यद्वारेण ते विरजा प्रयान्ति यत्रामृत स्सपुरुषो ह्यव्ययात्मे ' ति मुण्डकोपनिषत्प्रथममुण्डकद्वितीयखण्डश्रुत्यैकार्थ्यात । योजनाद्वयेपि श्रद्धातप इत्युपासतइत्यत्र श्रद्धा सत्यमुपासत इत्य त्रच - पर ब्रह्म तदेकप्राप्यताध्यवसाय पूर्वव तत्प्राप्तित्वरालक्षण- श्रद्धापूर्वकमुपासीनाएव विवक्षिताभवन्तीति ॥ १०५ ॥

उपबृंहितचैतच्छ्रुतिद्वय याज्ञवल्क्येन निजस्मृतितृतीयाध्याये- "यएवमेन जानन्ति येचारण्यवमाश्रिता । उपासते तप स्सत्य श्रद्धया परया युता ॥ क्रमात्ते सम्भवन्त्यर्चि रहश्शुक्ल तथो- त्तर । अयन देवलोकच सवितार सवैद्युत ॥ तत्र तत्पुरुषो दिव्योऽमानवो ब्रह्मलौकिकान् । करोति पुनरावृत्ति स्तेषामिह नविद्यत' इत्येव रूपैर्व- चनै ॥ १०६ ॥

अत्र तपस्सत्यमिति सामानाधिकरण्य प्रयोगेण छान्दोग्यगत- तपश्शब्द बृहदारण्यकगत सत्यशब्दयो रेकार्थता, श्रद्धया परया

युता इत्यनेन दर्शितश्रुत्यो श्रद्धाग्रहणस्य ब्रह्मोपासने ब्रह्मणि-श्रद्धापूर्वकत्वप्रतिपादनपरत्वाच्च स्पष्टीकृता ॥ १०७ ॥

परम यो महत्तप इति सहस्रनामपाठात् सत्य ज्ञानमनन्त ब्रह्मे त्यादिषु ब्रह्मणि सत्यशब्दश्रवणात स्ववाच्योपासकाना श्रूयमाणब्रह्मप्राप्त्यानुगुण्याच्च दर्शितश्रुतिगत तपस्सत्यशब्दयो ब्रह्म-परत्वम् ॥ १०८ ॥

एव गीताशास्त्रे ऽ पुनरावृत्तिलक्षणा चिरादिपथगामितया नि र्दिष्टानां द्विविधाधिकारिणा अक्षराव्यक्तशब्दित प्रत्यगात्मोपासके-ष्य पचाग्निविद्वयो ऽन्येषा श्रद्धापूर्वक परमपुरुषोपासकत्वेन नि-र्देशा ताद्दश शास्त्रस्य दर्शितश्रुतिद्वयोपबृह्मणत्वाच्च पचाग्निविदित रोपास्यविषयौ दर्शितश्रुतिगत तपस्सत्यशब्दौ परब्रह्मपरावपञ्यभवि-तुमर्हत ॥ १०९ ॥

तत्रहि द्वादशाध्याये दर्शितद्विविधाधिकारिस्वरूप पराया प्रथ मादिसप्तश्लोक्या 'एव सततयुक्ता ये भक्ता स्त्वा पर्युपासते। येचा प्यक्षरमव्यक्त तेषाके योगवित्तमा ' इति प्रथमश्लोके ऽ र्जुनप्रश्नपरे त्वा पर्युपासत इति भगवदुपासकत्वेन, 'मय्यावेश्यमनोयेमा नित्ययु क्ता उपासते। श्रद्धया परयो पेता स्ते मे युक्ततमामता' इति ताद्द शप्रश्नसमाधानपरे द्वितीयश्लोके श्रद्धापूर्वक भगवदुपासकत्वेनच-पचाग्निविदन्येषा निर्देश कृत ॥ ११० ॥

अस्मिन् शास्त्रे ऽ ष्टमाध्याये मार्गाचिरादिपथगामितया निर्दिष्ट द्विविधाधिकार्यनुवाद परत्वात , श्रद्धया परयोपेता इत्यनेन श्र-द्धातपइत्युपासत इत्यादिप्रत्यभिज्ञापकत्वा च्चेय सप्तश्लोकी दर्शित श्रु त्युक्त द्विविधाधिकारि परैवेत्यतो दर्शितश्रुतिगत तपस्सत्यशब्दौ गीताशास्त्रे भगवतैव परब्रह्मपरौ व्याख्यातौ भवत ॥ ११९ ॥

अत्र दर्शितद्विविधाधिकारिणो मध्ये पञ्चाग्निविदा मुपासन स्य ज्ञानयोगरूपत्व ब्रह्मनिष्ठाना मुपासनस्य भक्तिरूपत्वच श्रुतिस्मृतिविवक्षितम् ॥ ११२ ॥

अतएव, 'श्रद्धातपइत्युपासते, श्रद्धां सत्यमुपासते , उपासते तप स्सत्य श्रद्धया परया युता , एव सततयुक्ता ये भक्ता स्त्वा पर्युपासते, मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोपेता इत्यादिश्रुतिस्मृतिभि र्ब्रह्मनिष्ठाना मुपासनस्य भक्तियोगरूपत्व, 'तदइत्थ विदु , ते यएवमेतद्विदुः , यएव मेन जानन्ति , येचाप्यक्षरमव्यक्तम् , येत्वक्षरमनिर्देश्य मव्यक्तम् पर्युपासते । सर्वत्रग मचिन्त्यच कूटस्थ मचल ध्रुवम् ॥ सन्नियम्येन्द्रियग्राम सर्वत्र समबुद्धय. ' इत्यादि श्रुतिस्मृतिभिः पञ्चाग्निविदा मुपासनस्य ज्ञानयोगरूपत्व चावगम्यते ॥ ११३ ॥

अतएवच तत्तदधिकारिस्वरूपनिरूपणपरप्रकरणेषु पञ्चाग्निविदां ज्ञानयोग ब्रह्मनिष्ठाना भक्तियोगश्च तत्तत्राभिधीयते ॥ ११४ ॥

अत्र यद्यपि येचाप्यक्षरमव्यक्त मित्यत्र भक्ता स्त्वा पर्युपासत इत्यत पर्युपासतइति पद मनुवर्तते , येत्वक्षरमित्यादिव चनेच तत्पद स्वतन्त्र तिष्ठति , तथापि तत्रत्य पर्युपासतइ-तिपद मनुसन्दधत इत्येतावन्मात्रार्थक, नतु भजन्तइत्यर्थक, तद इत्थ विदु , यएव मेन जानन्तीत्यादिश्रुतिस्मृत्यैकार्थ्यात् , अन्य था भक्ता स्त्वा पर्युपासत इत्यत्र भक्ता स्सन्तोभजन्त इति पौनरुक्त्येनानन्वयापत्तेश्च । किंच-स्वापेक्षयोत्कृष्टपूज्यविषयक प्रीतिरूपापन्नोपासनस्यैव भक्तिरूपत्वेन स्वात्मानुसन्धानरूपोपासनस्य भक्तिरूपता न कथंचिदपि सभवति , तस्मा त्प्रोक्तस्थले पर्युपासत इति पदम् भक्तियोगार्थक मित्यनुसन्धेयम् ॥ ११५ ॥

इदं पुनरत्रावधेयम् । यद्यप्युदाहृतश्रुतिस्मृतिषु ब्रह्मनिष्ठो पासनविषये ष्युपासतइति पदमेव दृश्यते , तच्च नावश्यं भक्तिरूपस्यैवोपासनस्य वाचकम् , तथाविधोपासनवाचकत्वनैयत्या भावस्या नुपदमेवोक्तत्वात् , प्रमाणान्तरैकवत्त्वेन तस्येह तथात्वमिति चेत् यद्यपि विदुपासनविषयशब्दस्यापि तत्तुल्यवचम् , 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥' इति भक्तियोगस्य चतुर्विधाधिकारिसाधारणतया गीतत्वात् । तथापि श्रद्धादिपदं सहकृत तादृशपदस्य श्रद्धापूर्वकं ब्रह्मोपासकवाचिन भक्तिरूपोपासन वाचकता नैयत्यात दर्शितश्रुतिस्मृतिषु ब्रह्मनिष्ठाना भक्तिरूपस्यैव ब्रह्मोपासनस्य सिद्धिर्निष्प्रत्यूहा, श्रद्धापूर्वकस्य ब्रह्मोपासनस्यहि भक्तिरूपता नियता तत्सद्गुणानुसन्धानाधीनया रुच्या कश्चिपदार्थं स्वप्राप्यपुरुषार्थत्वेन परिगृह्य तदेकप्रियतया तद्विश्लेषासहिष्णोः रचिरेण तत्प्राप्तये तत्साधनत्वेन विश्वासिते तदुपासनादौ यात्वरा तस्यएव श्रद्धा शब्दार्थत्वेन प्रकृते ब्रह्मनिष्ठ स्वशेषित्व निरस्तनिखिलदोषत्व समस्तकल्याणगुणाकरत्वाद्यनुसन्धान जनित तदेकप्रियत्वाध्यवसाय तन्मूल तत्प्राप्तिविलम्बासहिष्णुत्वाधीन साधनत्व विश्वासपूर्वक तत्प्राप्तिसाधनानुष्ठानत्वरापूर्वक तदुपासनस्यैव श्रद्धापूर्वकब्रह्मोपासनरूपतायाः अत्र विवक्षितत्वेन तदृशोपासनस्य शेषित्वाभिमत विषयक प्रीतिरूपोपासनलक्षण भक्तित्व दुरपह्नवमेव । प्रकृतिवियुक्त प्रत्यगात्मोपासनस्य तु तन्नसम्भवति , प्रत्यगात्मन स्स्वात्मान प्रति शेषित्वेनाभिमतत्वाभावात श्रद्धाया उक्तलक्षणत्वाप्तवराधीन साधनत्वविश्वासपूर्वक तत्प्राप्ति साधना नुष्ठान त्वरा रूपत्व भाष्यकारैरेव तत्र तत्रोच्यते ।

यथोक्तम् गीतासु सप्तदशाध्याय द्वितीयश्लोकभाष्ये 'यत्र रुचि स्तत्र-श्रद्धा जायते, श्रद्धाहि स्वाभिमतं साधयत्येतदिति विश्वासपूर्विका साधने त्वरेति'। षष्ठाध्यायान्तिमश्लोकेऽपि 'श्रद्धावान् भजते योमा स मे युक्ततमोमत' इत्युत्तरार्धभाष्ये 'श्रद्धावान्-अत्यर्थं मत्प्रियत्वेन क्षणमात्र विश्लेषासहतया मत्प्राप्तिप्रवृत्तौ त्वरावान्, योमां भजते' इत्युक्त्यापि श्रद्धाया उक्तरूपता व्यक्ता। ईदृशविश्लेषासहिष्णुता लक्षण त्वरापूर्वक प्राप्यभूत शेष्युपासनस्य भक्तिरूपत्वादेवहि 'पुनर्विश्लेषभीरुत्व परमाभक्ति रुच्यत'इति भक्तिस्वरूप निर्वचनमपि सगच्छते। पञ्चाग्निविदान्तु प्रत्यगात्मनएव पुरुषार्थतयाभिमतत्वेन तत्प्राप्त्युपायतया भगवद्भक्तियोगस्याभिमतत्वेऽपि ब्रह्मण्युक्तलक्षणश्रद्धापूर्वक ब्रह्मोपासकत्व नास्त्येव प्रकृतिविमुक्तप्रत्यगात्मन्येव तेषा तथाविध श्रद्धासम्भवात्। अतएवहि दर्शितश्रुतिस्मृतिषु श्रद्धापूर्वकब्रह्मोपासकत्वेन पञ्चाग्निविद्यावृत्ततया ब्रह्मनिष्ठाना निर्देशः श्रद्धात प इत्युपासते श्रद्धां सत्यमुपासतइत्यादिना क्रियते। भाष्यकारैरप्युक्त श्रुत्यादिषु श्रद्धापूर्वकब्रह्मोपासकत्व पञ्चाग्निविद्यावृत्ततया भिमितम्म न्यानैः तादृशश्रुत्यर्थं मनुवदद्भि रनियमाधिकरण भाष्ये - यइत्थ विदुरिति पञ्चाग्निविद्यानिष्ठान् येचेमइत्यादिना श्रद्धापूर्वक ब्रह्मोपासीनां श्चोद्दिश्या र्चिरादिका गति रुपदिश्यत इति तेनैव रूपेण पञ्चाग्निविद्यावृत्ततया ब्रह्मनिष्ठानां निर्देशः कृतः। गीता द्वादशाध्यायावतारिकाभाष्येऽपि 'अनन्तरमात्मप्राप्तिसाधनभूता ह्यात्मोपासना द्भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्रया त्सुसुखोपादानत्वाच्च श्रैष्ठ्य' मित्यादिना भाष्यध्यायार्थ सग्रहेण प्रदर्शयद्भि यथोक्तम् पञ्चाग्निविदुपासन ब्रह्मनिष्ठोपासनयो र्दर्शित-श्रुत्याद्यभिमत वैलक्षण्य स्पष्टतरमेवाभापि। तस्मा दुक्तोपासन वैलक्षण्य दुरपह्नवमेवेति ॥ ११६ ॥

उक्तश्रुतौ तय इत्थ विदुरित्यत्र ब्रह्मात्मकतया प्रत्यगात्मनो वेदन विवक्षितम् – य आत्मनितिष्ठन्नात्मनोऽन्तरो यमात्मानवेद यस्यात्माशरीर य आत्मानमन्तरो यमयतीत्यादि श्रुत्या प्रत्यगात्मनो ब्रह्मशरीरभूतत-या तदात्मकतयैव विद्यमानतया तिरोधानभूतप्रकृति वियुक्त शुद्ध प्र-त्यगात्मस्वरूप साक्षात्कारदशायां द्रव्यचाक्षुषे रूपोपलम्भावश्यम्भा वव दन्तर्यामिभूत परब्रह्मोपलम्भावश्यम्भावात् । तमेव विदित्वाऽति मृत्युमेति नान्य पन्था अयनायविद्यतइति श्रुत्या निश्शेषसंसार स-म्बन्धनिवृत्ति रूप मृत्युतरणस्य ब्रह्मप्राप्तिश्च ब्रह्मवेदनैक साध्यतया यत्नेन तदाश्रयकतया देशविशेषावच्छिन्न ब्रह्मप्राप्तिमन्तरेण निश्शे षाविद्यानिवृत्तिलक्षण प्रकृतिविमुक्तत्व विशिष्ट प्रत्यगात्मप्राप्तिरूप-पञ्चाग्निविद्यापुरुषार्थासिद्ध्यापत्त्या तदर्थं तादृशब्रह्मप्राप्ते रावश्यकत्वे तत्क्रतुन्यायेना नुपासितस्य प्राप्तयोगेनापि तदुपासना वश्यक त्वाच्च ॥ ११७ ॥

तमिम पञ्चाग्निविद्यायां ब्रह्मणोऽप्युपासनसद्भाव श्रुतिरेव न्या यानुगृहीता सम्यगवगमयति ॥ ११८ ॥

'श्रद्धा तपइत्युपासते' 'श्रद्धा सत्यमुपासते' इत्यादिवाहि श्रु-ति, सामान्य ब्रह्मोपासकत्वमात्रेण, तय इत्थ विदु, ते य एवमेत द्विदुरिति पूर्वनिर्दिष्ट पञ्चाग्निविद्भ्यो ब्रह्मनिष्ठाना सम्यग्व्यावृत्त्यसिद्धि मभिसन्धाय श्रद्धापूर्वब्रह्मोपासकत्वेन तेभ्य स्तान् व्यावर्त्य प्रतिपा दयन्ती पञ्चाग्निविद्यायामपि ब्रह्मोपासन सद्भावमवगमय-त्येव ॥ ११९ ॥

एष – स एनान् ब्रह्मगमयतीति पञ्चाग्निविदामपि ब्रह्मप्राप्ति-प्रतिपादयन्ती श्रुतिरपि तत्क्रतुन्यायानुगृहीता तमवगमयति, अनुपा सितस्य ब्रह्मण प्राप्तयोगात् ॥ १२० ॥

अपिच - एष देव पथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्तेनावर्तन्ते , तेषु ब्रह्मलोकेषु परा परावतो वसन्ति , तेषां न पुनरावृत्ति ,इत्यादिका अर्चिरादिमार्गगामिनामपुनरावृत्ति श्रुतिरपि योवा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवतीति, योवा एतदक्षरं गार्ग्यविदित्वा ऽस्माल्लोकात्प्रैति सकृपणोऽथ य एतदक्षरं गार्गिविदित्वा ऽस्माल्लोकात्प्रैति स ब्राह्मणइति बृहदारण्यक पञ्चमाध्यायाष्टम ब्राह्मणगत श्रुत्यैकार्थ्यानुगृहीता समवगमयति । अर्चिरादिगामितया श्रुतानां पञ्चाग्निविदां स्वविद्यायां ब्रह्मोपासनाभावे ऽन्तवत्फलत्वेन पुनरावृत्ते रवर्जनीयत्वेनापुनरावृत्तिश्रवणविरोधापत्ते ॥ १२१ ॥

एवं गीतास्वप्यष्टमाध्याये , ऐश्वर्यार्थि पञ्चाग्निवि द्ब्रह्मनिष्ठानां-तत्रापि प्रथमानां पुनरावृत्तिमत्वेन , इतरेषा मपुनरावृत्तिमत्वेनच प्रतिपादितानां पुनरावृत्त्यपुनरावृत्तियोग्य मार्गकथनावसरे, 'यत्र-काले त्वनावृत्ति मावृत्तिंचैव योगिनः । प्रयातायान्तितं कालं वक्ष्यामि भरतर्षभ ॥ अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इत्यत्र , ब्रह्मविच्छब्देन पञ्चाग्निविद्ब्रह्मनिष्ठानां मुभयेषां ग्रहणं कुर्वता भगवता यथोक्तरीत्या पञ्चाग्निविद्यायां ब्रह्मोपासन सद्भाव स्स्पष्टतरमभिहित ॥१२२॥

तदिदं सर्वमभिप्रेत्यैव भाष्यकारै र्दर्शितगीतास्थाष्टमाध्यायावतारिकाभाष्ये , तद्य इत्थं विदुरिति श्रुतेः यथोक्तरीत्या अचिदंशस्य त्याज्यत्वेन चिदंशस्य प्राप्यत्वेन चानुसन्धानपरत्वं, तत्रापि तत्क्रतु-न्यायानुग्रहीत ब्रह्मप्राप्त्यपुनरावृत्ति श्रवणबलेन चिद्वियुक्तस्या प्यस्तु नो ब्रह्मात्मकत्वेनानुसन्धानं परत्वच, व्याख्यातम् ॥ १२३ ॥

समर्थितचार्यैव दिशा पञ्चाग्निविदां प्रकृतिवियुक्त ब्रह्मात्मकात्मानुसन्धायित्व मेतदधिकरण भाष्यदीपसारादिषु ॥ १२४ ॥

इत्थं पञ्चाग्निविदामपि स एतान् ब्रह्म गमयतीति श्रूयमाणब्रह्म प्राप्तिहेतु ब्रह्मोपासनस्य प्रमाणन्यायसञ्चाराभ्यां निष्प्रत्यूह सिद्धे, तत्क्रतुन्यायस्य प्रत्यक्षश्रुतिबलेन पञ्चाग्निविद्याविषये बाधेन स-ङ्कोचमभ्युपगम्य न्यायाप्रतिहतप्रसराय वर्णनं इतरेषामनुपयुक्तमेवेति भाष्यकाराशयः । बाधकत्वेनाभिमताया श्रुतेरेव श्रुत्यन्तरैकार्थ्यं प्राप्ताया स्स्मृत्युपबृंहिताया न्यायानुगृहीतायाश्च यथोक्तरीत्या पञ्चाग्निविदामपि ब्रह्मोपासकत्वबोधकत्वात् ॥ १२५ ॥

नच 'एवं पञ्चाग्निविदामपि ब्रह्मप्राप्तिफल ब्रह्मोपासननिष्ठत्वे ब्रह्मनिष्ठाना ममीषाच कोविशेष' इति वाच्यम् । ब्रह्मनिष्ठाना पुरुषार्थ विषया प्राप्य वलक्षणस्य परमप्राप्यत्वस्य परस्मिन् ब्रह्मणि पञ्चाग्निविदां तथाविधप्राप्यत्वस्य प्रत्यगात्मनिच स्वीकारेण वैलक्षण्य सिद्धे । अन्यथोभयथा विभज्य निर्देशासागत्यापाताच्च ॥ १२६ ॥

किंच- पञ्चाग्निविदुपासने ब्रह्मण ब्रह्मनिष्ठोपासने प्रत्यगात्म नश्च विषयत्वेपि तयो स्तत्राप्रधानत्वा यत्प्रधान यदुपासन त देव तत्र धर्मतया निर्देष्टव्यम् प्राधान्यद्योतनाये त्याशयेनैव तद्यइत्थं विदु रित्यत्र पूर्वोक्तपरामर्शिना तच्छब्देन प्रत्यगात्मनो वेदनप्रधानधर्मतया 'श्रद्धातप इत्युपासते, श्रद्धा सत्य मुपासत' इत्यत्र तपस्सत्यशब्दाभ्यां परब्रह्मण उपासनप्रधानधर्मतयाच श्रु-त्या निर्देश. क्रियते ॥ १२७ ॥

स्मरतिच भगवान् पाणिनि 'कर्तुरीप्सिततम कर्मे' ति कर्तुः क्रियया प्राप्तु मिष्टतमस्यैव कारकस्य मुख्यधर्मत्वम् ॥ १२८ ॥

इत्थंच पञ्चाग्निविदामपि स्वोपासनेन ब्रह्मण. प्राप्तु मिष्टत्वेपि प्रत्यगात्मनएव प्राप्तुमिष्टतमत्व, ब्रह्मनिष्ठानाच प्रत्यगात्मनोपि 'परं ज्योति रुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादि श्रुत्या भावान्' 'ब्रह्मनिन्'(?)गच्छन्ति प्रादयन्तिच' 'अविभागे न दृष्टत्वा दि'त्याधिकरण परम प्राप्य त्वादि विशिष्टतया निर्णीततया

स्वोपासनेन प्राप्तुमिष्टत्वेपि प्राप्तुमिष्टतमत्वं परस्यैव ब्रह्मणइति दु-रपह्नवमेव प्राप्यवैलक्षण्यम् ॥ १२९ ॥

तद्यइत्थं विदुः, ते यएव मेतद्विदुः, इत्यत्र श्रूयमाणपंचाग्नि-विद्या प्रजापतिवाक्यादौश्रुत परविद्यांगभूत प्रत्यगात्मविद्यामात्ररूपा तु नकथंचिदपि निर्वोढुं शक्या। तथासति ब्रह्मनिष्ठानां पंचाग्नि वि द्भिन्नतया पचाग्निविदो गत्युपदेशेनैव तेषां तत्सिद्ध्या येचे-मेरण्ये श्रद्धातपइत्युपासते, येचेमेरण्ये श्रद्धां सत्य मुपासत इति ब्रह्मनिष्ठानां पृथग्गत्युपदेशवैय्यर्थ्यात् ॥ १३० ॥

पंचाग्निविद्यायाः परविद्यांगभूत प्रत्यगात्मविद्यामात्रत्वे तस्या स्सर्वब्रह्मविदा विदितत्वावश्यकतया पचाग्निविद्या प्रकरणे प्रवाह णाख्येन जैवलिना पांचालराजेन गौतमंप्र त्युपदिश्यमानाया अस्या स्तत· पूर्वं केनापि ब्राह्मणेना विज्ञातत्व क्षत्रियपरपरयैव प्रवर्तमा न त्वञ्च तेनाभिधीयमान मनुपपन्नमेव भवेत्, कालत्रयेपि ब्राह्मणेष्वे व ब्रह्मविद्बाहुल्यश्रवणेन आत्मनिष्ठानां तेषा मंगसद्भावावश्यकतया पचाग्निविद्या विज्ञानवैधुर्यासंभवात् ॥ १३१ ॥

श्रूयतेहि बृहदारण्यकाष्टमाध्याय द्वितीयब्राह्मणे 'यथेयं विद्ये-त' पूर्वं नकास्मिंश्चन ब्राह्मण उवास तां त्वहं तुभ्यं व क्ष्यामी' ति ॥ १३२ ॥

छान्दोग्येपि पचमप्रपाठके तृतीयखण्डे 'यथेय न प्राक्त्वत्तः पु-राविद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशा सन मभूदिति ॥ १३३ ॥

अप्रतीकालम्बनानित्यत्र अप्रतीकोपासकानित्यनुक्त्वा उपासक पदस्थाने आलम्बनपद प्रयोगा त्प्राप्यतया प्रतीकः मुख्योपासका स्स-र्वएव प्रतीकालम्बनशब्देन गृह्यन्ते। प्राप्यतया प्रतीकोपासकावदेव प्रतीकालम्बनत्व कथनात् ॥ १३४ ॥

इत्थंच प्राप्यबुध्या प्रतीकं प्रापकबुध्या अन्यश्चोपासीना', प्राप्यबुद्धयाप्रापकबुध्याच प्रतीकमेवोपासीना श्चे, त्युभाय विधा अपि प्रतीकालं *बनशब्देनगृहीताभवन्ति* ॥ १२५ ॥

यदि पुनः प्रतीकोपासकपदमिद्दस्या तदा स्वरसतो ऽसंकोचेन प्राप्यतया प्रापकतयाच प्रतीकमुपासीनानामेव बोधस्स्यात् , तथा सति दृष्टचुपासकव्यतिरिक्ताना मर्वाचीनैश्वर्यार्थिना मातिवाहिक नेयत्वनिषेधो नसंभवतीति तादृशपदेपेक्षा ॥ १२६ ॥

उपासन वाचिपदस्य सति बाधके प्राप्यतया प्रापकतयाच स्वसमभिव्याहृत कर्मवाचिपदार्थ गोचरोपासन परत्वमेवा सकोचन्यायेन स्वरससिद्धं ॥ १२७ ॥

अतएवोक्तं प्रतीकाधिकरणभाष्ये प्रतीकोपासनंहिनाम अब्रह्मणि ब्रह्मदृष्टयानुसन्धानमिति ॥ १२८ ॥

ब्रह्मदृष्टयानुसन्धान चात्र ब्रह्मण प्राप्यत्वेन प्रापकत्वेन चाभिसंहितस्य दृष्टयानुसन्धानरूपंस *प्राप्यप्रापकविधया* प्रतीकानुसन्धान रूपमेव पर्यवस्यति ॥१२९ ॥

*अतश्च प्रतीकालंबनशब्दो* दर्शितालम्बनपद स्वारस्य पर्यालोचनेनैव ब्रह्मदृष्ट्या स्वरूपेणच प्रतीकानुसन्धायिना द्विविधाना मपि प्रतिपादनपरो व्याख्यात एत दधिकरणभाष्यादिषु ॥ १४० ॥

यथोक्तं भाष्ये - येतु ब्रह्मकार्यान्तर्भूत नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवत ब्रह्मदृष्ट्या केवलंवा तत्तद्वस्तूपासते नतान्नयतीति , अचिन्मिश्र केवल वाऽचिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगन च यउपासते नतान्नयतीतिच ॥ १४१ ॥

दीपेप्युक्तम् - प्रतीकालंबनास्तु अचिन्मिश्रं केवलमचिद्वस्तुच सिंहदृष्ट्या देवदत्तवत ब्रह्मदृष्ट्या स्वरूपेणवा तद्वस्तु य उपासते त इति ॥ १४२ ॥

सारूप्यमभिहितम् - अप्रतीकालम्बनाद् नामादिप्राणशब्दनिर्दिष्ट- स्वगात्मपर्यन्त सर्वचिदचिद्ब्रह्मानुजात ब्रह्मदृष्ट्या स्वरूपेण वा य उपास ते, प्रतीकालम्बना तद्व्यतिरिक्ता इति ॥१४३॥

अत एव ब्रह्मदृष्ट्योपासन दृष्टान्तरीत्या प्रत्यग्यात्मविषयो पासनरूपम् , स्वरूपेणोपासनच प्राप्यविषयोपासनरूप, मिति बोध्यम् ॥ १४४ ॥

तथाच प्रतीकालम्बनत्वेन हिरण्यगर्भलक्षण कार्योपासकस्यापि ग्रहणेन तस्या चिरादिगतिनिषेधसिद्ध्या बादरिपक्षः , अप्रतीकालंब- नत्वेन पञ्चाग्निविद् ब्रह्मनिष्ठोभयविधोपासकग्रहणकृत्या तेषामर्चिरादि गति प्रतिपादनेन जैमिनिपक्ष श्च प्रत्याख्यातौ भवत. ॥ १४५ ॥

यद्यपि बादरिपक्ष व्युदासार्थं हिरण्यगर्भोपासक मात्रस्या चिरादिगति निषेधा- न्नत्वन्येषां प्रतीकालम्बनानां , तथापि अन्ये- षां प्रतीकालम्बनानामिव प्रतीकालम्बनत्वाविशेषेण स्यापि नार्चिरादिग तिरिति दृष्टान्तपुरःसर व्युदसनार्थं प्रतीकालम्बनत्वेन तद्ग्रहणमिति बोध्यम् ॥ १४६ ॥

परमप्राप्यभूतां स्वरस्मादुद्गतो ऽर्वाचीन प्रकृतिवियुक्त प्रत्यगात्म तत्त्वावलम्बिना पञ्चाग्निविदा प्रतीकालम्बन शब्दा भिलपनीयाना कथ ममतीकाल्म्बनत्वमिति चे दिदमत्रावधेयम् । परमस्थान प्रकृतिवियुक्त प्रत्यगात्मस्वरूप भगवत्स्वरूपाणा त्रयाणामपि परमप्राप्यत्वेनै कनैव प्रवृत्तिनिमित्तेन परमपदशब्दवाच्यतायां वेदार्थसंग्रहे भाष्य कारैस्समर्थितत्वात् प्रकृतिवियुक्त प्रत्यगात्मस्वरूपस्य परमप्राप्यत्वमेव सम्भवति न प्रतीकत्व, यथोक्त तत्र, 'एतदुक्त भवति, क्वचित्परम स्थान परमपदशब्देन प्रतिपाद्यते, क्वचित्प्रकृतिवियुक्तात्मस्वरूप, क्वचिद्भगवत्स्वरूपच तद्विष्णो परम पदमिति परमस्थान, सर्ग स्थित्यन्तकालेषु त्रिधैव सम्प्रवर्तत । गुणप्रवृत्त्या परम गुण तस्या गुण महदिति प्रकृतिविनिर्मुक्तात्मस्वरूप, समस्तहेयरहित विष्ण्वाख्य परम पदमित्यत्र भगवत्स्वरूप, त्रीण्यप्येतानि परमप्राप्य त्वेन परमपदशब्देन प्रतिपाद्यन्ते, कथ त्रयाणा परमप्राप्यत्वमिति-चेत्, भगवत्स्वरूप परमप्राप्यत्वादेव परमपदशब्दवाच्यम्, इतरयो -रपि भगवत्प्राप्ति गर्भत्वादेव परमपदत्व, सवकर्मविनिर्मुक्तात्मस्वरूपा वाप्तिर्हि भगवत्प्राप्तिगर्भा त इमेसत्या कामा अनृता पि धा नाऽइति भगवतो गुणगणस्य तिरोधायकत्वेना नृतशब्देन स्वकर्मण प्रतिपादनादिति । अत्र भगवत्प्राप्ति निमित्तीकृत्य-त्रयाणा परम प्राप्यत्व प्रतिपादयता भाष्यकृता मिद तात्पर्यम् । यस्मिन् प्राप्ये प्राप्ते सर्वस्मात्पर तत्त्व नप्राप्तभवति, पश्चात्प्राप्तव्यतयै-व चावशिष्यते, तदेवच प्रतीकशब्दवाच्य मर्वाचीन प्राप्यम्, यस्मिन् प्राप्ते सर्वस्मात्पर तत्त्व प्राप्तमेवभवति, पश्चात्प्राप्तव्यतया च नावशिष्यते, तत्परमप्राप्यमेव, अत्र भगवत्स्वरूपस्य स्वय परतत्त्व रूपत्वेन तत्प्राप्ते परतत्त्वप्राप्तिरूपत्वात्तस्य स्वतएव परमप्राप्यत्व, स्थानविशेष प्रकृतिविमुक्तात्मस्वरूपयो भगवत्स्वरूपतिरोधायकनिश्शेषा विद्यानिवृत्त्या प्राप्तिसमकालमेव भगवत्प्राप्तिनैयत्येन परमप्राप्यत्वसभवति, एतदभिप्रायेणैवच त्रयाणा परमपदशब्दव्यपदेश, नामादिपदा

त्कृष्ट प्राप्योत्कृष्टत्वसम्बन्धेन प्राप्यविदिष्टप्राप्यत्वपर्यवसित प्रकृतिवि
युक्तप्रत्यगात्मस्वरूप परमात्मलक्षण प्राप्यद्वयसाधारण । पृषोदरादिव
त्तत्तदवयवलोपमाश्रित्य व्युत्पादनीयस्य परमशब्दस्य पूर्वोक्तव्युत्प
त्तिद्वयेऽपि व्युत्पत्ति स्सम्भवति । एषापि व्युत्पत्ति र्भाष्यका
राभिमतैव । अतएव गीताष्टमाध्यायविंशैक विंशश्लोकभाष्ये भाषितम् ,
तन्मम, परम धाम - परं नियमनस्थानम् , अचेतनप्रकृतिरेकं निय
मनस्थानं, तत्संसृष्टरूपाजीवप्रकृति द्वितीयं नियमनस्थानम् , अ
चित्संसर्गवियुक्तं स्वरूपेणावस्थितं मुक्तस्वरूपं परमं नियमनस्था
नमित्यर्थइति । अत्र प्रकृतिविनिर्मुक्त प्रत्यगात्मविषयस्य परम धाम
स्वरस्य नियमनस्थानपर्वत्रये तृतीयपर्वस्थानरूपता प्रकृतिवियुक्त प्र
त्यगात्मन उपपाद्य तत्परत्वोपपादना त्परमशब्दस्य परान्महादिति
व्युत्पत्ति रेवाभिप्रेता । अन्यथा नियमनस्थानपर्वत्रय प्रदर्शना नावश्य
कत्वात् । एवं त्रयोदशाध्याय द्वाविंशश्लोकस्थ परमात्मशब्दव्याख्यान
परभाष्यग्रन्थेन पञ्चदशाध्याय सप्तदशश्लोकस्थ परमात्मशब्दभाष्य
ग्रन्थेनच परमशब्दस्येदृश व्युत्पत्तिरेवाभिमता ऽवगम्यते । तत्राप्य
र्वाचीनपरत्वद्वयप्रदर्शनात् । एवम् परमेव परममिति स्वार्थिकमस्य
यान्तत्व माश्रित्य परमशब्दस्योत्कृष्टमात्र विषयतायां अपि सुवच
त्वा दपुनरावृत्तिहेतुत्व निबन्धनो त्कर्षशालि प्राप्यत्वेन दर्शितोभय-
विषय परमप्राप्यशब्दो भवितु मर्हति । परमशब्दस्य दर्शित
रीत्या केवलोत्कृष्टमात्रविषयतापि दर्शितगीताभाष्ये दर्शितधामशब्द
स्य प्रकाशपरत्वकल्पेऽभिप्रेता । यथोक्तम् तत्र 'अथवा प्रकाश
वाची धामशब्द प्रकाशश्चेह ज्ञानमभिमतम् , प्रकृतिसंसृष्टा त्परि
च्छिन्नज्ञानरूपा दात्मनोऽपरिच्छिन्नज्ञानरूपतया मुक्तस्वरूप परमम्
धामे' ति । अत्र परापरप्रकाशपर्वद्वयस्यैवा भिधाना त्परमशब्दस्योत्कृ
ष्टमात्रविषयतैवाभिप्रेता । पूर्वकल्पाभिमतव्युत्पत्ते रिहाप्यभिमतत्वे अप
र प्रकाश पर प्रकाश -परात्पर प्रकाशश्चेति - प्रकाशपर्वत्रय

अभिधातव्यम्, असम्भावितमेव च परात्परप्रकाशस्वरूपस्य प्रत्यगात्म-
नि, प्रकृतितत्त्वस्य प्रकाशरूपत्वाभावेन परप्रकाशपर्यन्तरूपत्वासम्भ-
वात। इत्थं परमप्राप्यत्वस्य विवक्षाभेदेन नानाविधस्य प्रकृतिवि-
युक्त प्रत्यगात्म परमात्मोभय साधारणस्य सम्भवत
परम प्राप्या दर्वाचीनत्व लक्षणम् प्रतीकत्वम् प्र-
कृतिवियुक्त प्रत्यगात्मन्यव्यावृत्तमेव भवति। अतो न पञ्चाग्निविद्
प्रतीकालम्बनाभावानि। यद्वा - परमशब्दघटक परशब्दस्योत्कृष्टमात्र
विषयत्वस्वीकारे परमप्राप्यशब्देन लभ्यमान स्वोत्कृष्टत्वसम्बन्धाव
च्छिन्ना धेयतासम्बन्धेन प्राप्यविशिष्टान्यप्राप्यत्वपर्यवसन्न परमप्राप्य
त्व परब्रह्मासाधारण मेवेह विवक्ष्यतां, उक्तलक्षण परमप्राप्यार्वाची
न प्राप्यत्वमेव च प्रतीकत्वमिह विवक्षित भवतु। तथापि नैते पञ्चा-
ग्निविद् प्रतीकालम्बनकोटौ निविशन्ते। तथाहि। प्रतीकालम्बनत्व नताव
त्स्वप्राप्तिप्रयोजक स्वनिष्ठ विलक्षणविषयतानिरूपकत्वसम्बन्धेन प्रतीक
विशिष्टोपासनाश्रयत्व। तथासति सर्वासु ब्रह्मविद्यासु प्रत्यगात्म
नोपि ब्रह्मशरीरत्वेनोपास्यतया मुक्तिदशायां तथैव प्राप्यतायाश्च -
तृतीयाध्याय तृतीयपादे रविम्शाधिकरण तद्भाष्य चतुर्थाध्याय प्रथम
पाद द्वितीयाधिकरण तद्भाष्य सिद्धत्वात्। सर्वंह पश्य पश्यति स
र्वमाप्नोति सर्वशः इत्यादिश्रुत्या सर्वसाक्षात्कार सर्वप्राप्त्योर्मुक्तैश्वर्यतया
श्रूयमाणत्वा तत्क्रतुन्यायेन प्राप्यस्योपास्यतया आवश्यकत्वाच्च स-
र्वेषां ब्रह्मविदां पक्षद्वयेपि प्रतीकालम्बनत्वापत्ते। उक्तं हि - प्रथमा
ध्याय तृतीयपाद पञ्चमाधिकरण सप्तमसूत्रभाष्ये 'ब्रह्मप्रेप्सोर्हि जी
वात्मनस्स्वरूपञ्च ज्ञातव्यमेव, स्वयमपि कल्याणगुणगणस्सन्ननवधिकातिश
यासङ्ख्येय कल्याणगुणगण परब्रह्मानुभविष्यतीति ब्रह्मोपासन प्रकरणान्तर्गत
त्वात्स्वस्वरूप याथात्म्यविज्ञानस्ये ति। चतुर्थाध्याय चतुर्थपादषष्ठाधिकरण
तृतीयसूत्रभाष्ये प्युक्तम्, 'निर्धूतनिखिलतिरोधान निरस्तहेयप्रत्यनीक
स्वरूपाविर्भावात् [illegible] परब्रह्म सदृश [illegible] कल्याणगुण

मनुभवति मुक्त," तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्व 'मिति । अपितु-ब्रह्मप्राप्त्यभाव विशिष्ट स्वप्राप्तिप्रयोजक स्वनिष्ठ विलक्षणविषयतानिरूपकत्वसम्बन्धेन प्रतीकविशिष्टोपासना-श्रयत्वमेवेह विवक्षितं प्रतीकालम्बनत्वं । तदेवप्राप्तिप्रयोजक तन्निष्ठवि-लक्षणविषयता शाल्युपासनाश्रयत्वस्यैव तदालम्बनत्वरूपत्वात् । स्वप्राप्तौ ब्रह्मप्राप्त्यभाव वैशिष्ट्यञ्च समानकालिकत्व सामानाधिकरण्यो भय सम्बन्धेन, ब्रह्मविदां मुक्तिदशायां ब्रह्मप्राप्तौ विद्यमानायामेव तदन्त पातितया प्रतीकपदार्थप्राप्ते विद्यमानतया न प्रतीकालम्बनत्वं तेषामिति वक्तव्यं । इत्थञ्च परमात्म प्रकृतिवियुक्त प्रत्यगात्मो भय साधारण परमप्राप्यत्वप-क्ष परमात्मासाधारण परमप्राप्यत्वपक्षयो द्वयोरपि पञ्चाग्निविदामपि नप्रतीकालम्बनत्वप्रसङ्गः, ब्रह्मप्राप्तिगर्भाया एव प्रकृतिवियुक्तप्रत्यगा त्मप्राप्तेः तदीयविद्याफलत्वात्, तदर्थमेव तदीयविद्यायां तत्क्रतु-न्यायेन ब्रह्मात्मकत्वेन प्रकृतिवियुक्तप्रत्यगात्मोपासन रूपतया शि क्षणाच्च । प्रतीकालम्बनशब्दघटक प्रतीकशब्दस्य प्रकृतितन्मिश्रमात्र परतया व्याख्यानपरोदाहृत भाष्यादिग्रन्थ स्तदेतत्पक्षद्वयेपि सङ्गत । द्वितीयपक्षे प्रकृतिवियुक्तप्रत्यगात्मनोपि प्रतीकपदार्थान्तर्भावेपि त-त्प्राप्तिदशायां ब्रह्मप्राप्तिनैयत्येन ब्रह्मप्राप्त्यभावविशिष्ट तत्प्राप्तिप्रयो जक तदुपासनाप्रसिद्ध्या ऽन्यप्रतीकशब्दस्य तत्परत्वासम्भवेन तथा व्याख्यानोपपत्ते । तथाच प्रकृतितत्त्व तन्मिश्रवा तदेकप्रा-प्यतयो पासीनानां भवान्तरपुरुषार्थ तारतम्यसद्भावेपि तदीयपुरुषा र्थस्य प्रकृतितत्त्वनिबन्धन पुरुषार्थकोटावेव निविष्टतया तादृशा-धिकारिविषय प्रतीकालम्बनशब्द प्रकृतितत्त्वनिबन्धन पुरुषार्थभू-तैश्वर्यार्थिविषयएव विश्राम्यति । तद्व्यतिरिक्तविषयो ऽप्रतीकाल म्बनशब्दश्च तादृशपुरुषार्थविलक्षण प्रत्यगात्मतत्त्वनिबन्धन पुरुषा र्थभूत कैवल्यनिष्ठ पञ्चाग्निविदधिकारिविषय, ततो ऽपि विलक्षणप रमात्मतत्त्वनिबन्धन पुरुषार्थभूत भगवत्प्राप्तिनिष्ठ परब्रह्मोपासकाधि-कारिविषयश्च विश्राम्यति । पञ्चाग्निविदां परब्रह्मोपासकानाञ्च प्रा

त्पानित्यत्वेना पुनरावृत्त्यर्दवेनैकोक्त्या ग्रहण मिह कृतम् । अतो न कथंचिदपि पचाग्निविदां प्रतीकालम्बनताप्रसंग इति ॥ १४७ ॥

सू ॥ १० ॥ विशेषच दर्शयति ॥ ४ ३ १९ ॥

नामादिप्रतीकोपासकान् दृष्टान्तीकृत्य प्रतीकालम्बनत्वाविशेषे ण हिरण्यगर्भलक्षण कार्यब्रह्मोपासकानाम र्च्यर्चिरादिगति मदर्शी- नापुनरावृत्ति ब्रह्मप्राप्तिलक्षणफलाभाव स्समर्थित प्राक् ॥ १४८ ॥

दृष्टान्ततया ऽभिमतानां नामादिप्रतीकोपासकाना तदभावो ऽसिद्ध इत्याशंकापरिहाराय तेषा तदभाव श्रुत्या दर्शयितुं प्रवृत्त दशमसूत्रम् ॥ १४९ ॥

अस्यार्थ विशेषच - नामादिप्रतीकोपासकाना मर्चिरादिगत्यपुनरावृत्ति ब्रह्मप्राप्ती विना तादृशगत्यनपेक्षपरिमितफलप्राप्तिलक्षण विशेषच, दर्शयति प्रतिपादयति, श्रुतिरेवेति ॥ १५० ॥

अत्र विवक्षिता श्रुतिश्च छान्दोग्ये सप्तमप्रपाठके प्रथमखण्डे 'सयोनामब्रह्मेत्युपास्ते यावन्नाम्नोगत तत्रास्य यथाकाम चारोभवती' त्यादि पचमखण्डिकाप्रभृति , ' प्राणोह्येवैतानिसर्वाणि भवती ' त्यादि पचदशखण्ड चतुर्थखण्डिकान्ता, एव जातीयकास्य- लांतरस्थिताच ॥ १५१ ॥

अत्र नामादिगोचरमात्रे यथाकामसचारादिलक्षण परिमितफल प्राप्तिरेव नामादिप्राणपर्यंतप्रतीकोपासकाना श्रूयते , नत्वपरिमित ब्रह्मप्राप्ति ॥ १५२ ॥

यावच्छब्दादिना फलस्य परिमितत्वहि स्पष्टीक्रियते ॥ १५३॥

यद्यपि प्राणलक्षणप्रतीकोपासनस्य परिच्छिन्नफलश्रवण न स्प ष्टतयोपलभ्यते , तथापि - ' प्राणोह्येवैतानिसर्वाणि भवती ' त्यादिषु

पतच्छब्दनिर्दिष्ट प्राकृतसर्वलमाणिलक्षणा चिन्मिश्रवित्तरवरूपपरिमित फलप्राप्ति रवगम्यतएव ॥ १५४ ॥

'एपतुवा अतिवदति यस्सत्येनातिवदती ' त्यादि षोडशखण्ड श्रुत्या प्राणोपासकादपि सत्योपासकस्या तिवादित्व प्रतिपादयनत्यापि प्राणोपासकस्य परिमितफल भाक्त्व मेव गम्यते ॥ १५५ ॥

यद्यपि सत्यशब्दवाच्य भूमशब्दितपरब्रह्मोपासकस्यापि पच विंशखण्डान्ते ऽनवधिकातिशयानन्द ब्रह्मानुभवसर्वलोककामचारादिलक्षणापरिमित फलप्राप्तिमात्र श्रूयते, नार्चिरादिगति , तथापि सकल ब्रह्मविद्यानिष्ठाना तृतीयाध्याय तृतीयपादस्थे त्रयोदशे ऽ नियमाधिकरणे 'य एव मतद्विदुर्येचामी अरण्येश्रद्धा सत्यमुपासते ते ऽर्चिषमभिसभवती ' तिवाजसनेयकश्रुत्या, तद्यइत्थ विदुर्येचमेरण्ये श्रद्धातपइत्युपासतेतेर्चिषमभिसभवतीति छान्दोग्यश्रुत्याचा र्चिरादिगत्या ब्रह्मप्राप्तिसमर्थनात् , चतुर्थाध्याये तृतीयपादस्थे पूर्वमेऽर्चिराद्यधिकरणे सर्वेषामपि ब्रह्मोपासकाना समानप्रकरणन्यायेना र्चिरादिलक्षणैकमार्गगामिता स्थापनाच्चे हापि तन्न्यायेन गतिस्सिध्यतीति नविरोध इतिचेध्यम् ॥ १५६ ॥

अथ भाव - अर्चिरादिगते र्ब्रह्मप्राप्तिफलनियतत्तया श्रुतिभि प्रतिपन्नतया तादृशगत्यनपेक्ष ब्रह्मप्राप्तीतरपरिमितफलाना प्रतीकालम्बनाना नतादृशगतिस्सभवति । इथचा व्यवधानेन ब्रह्मप्राप्तिरूप फलमधिगतु येऽधिकारिण प्रस्थिता , तानेवार्चिरादिरातिवाहिकगणोन यति, नहिरण्यगर्भोपासक, तस्यापि प्राणरूपप्रतीकोपासक समर्शीलतया प्रतीकालम्बनतया अपर्जनीयत्वादिति ॥ १५७ ॥

बादरिपक्षे चतुर्थपचम सूत्रोदाहृत श्रुतिस्मृत्यो *जैमिनिपक्षोक्तयैव* दिशा निर्वाहो बादरायणस्या प्यभिमतो भाष्य १५८॥

इदमत्र नयमादिद्विसूत्र्या निष्पन्न बादरायणतात्पर्यं सर्वस्व । हिरण्यगर्भलक्षण कार्यब्रह्मोपासीना स्तादृशा ब्रह्मनयत्यातिवाहिकगण इति बादरिपक्षो न युक्त', ब्रह्मविद्याप्रकरणेष्वेव श्रूयमाणाया- अर्चिरादिगते स्साक्षात्परब्रह्मप्राप्ति हेतुतयैव तत्र श्रूयमाणत्वात्, क्लि ष्टकल्पनादिभि स्तादृश श्रुत्यन्यथानयने प्रबलतरयोजाभवात् ताद शश्रुते, रपरब्रह्मविषयत्वे परविद्याप्रकरण विरोधात् सर्वगतस्यापि ब्रह्मण गतिशास्त्रबल सिद्धस्य देशविशेषएव निश्शेषाविद्यानिवृत्ति सम्भवस्य दुरपह्नवतया त विना तत्प्राप्तेरयोगेन मार्गविशेषेण- देशविशेषगतिपूर्वकप्राप्ते रयुक्तत्वाभावाच्च । यथाहि प्रकृतिमण्ड लएव क्वचित्पुण्यदेशे सत्त्वगुणोन्मेष, क्वचित्पापदेशे रजस्तमोगु णोन्मेष स्वर्गादिषु क्वचित्सुखैकतानता नरकादिषु क्वचिद्दुःखैकतान ता च लोकवेदसिद्धा नापलपितु शक्या, तथैव सर्वगतेपि ब्रह्मणि- क्वचित्प्रदेशविशेषे जनाना सदाविकारहेतु गुणत्रयमय प्रकृतितत्वस सर्ग तन्मूलाविद्यादि सकलदोषसपत्ति - क्वचित्प्रदेशविशेषे शुद्ध सत्त्वतत्त्वससर्ग तन्मूलनिश्शेषाविद्यानिवृत्ति निरतिशयज्ञानविकासा- दि सम्पत्तिश्च नापलपितु शक्यैवेति देशविशेषएव निश्शेषाविद्यानि वृत्ति वर्णन नासम्भवदुक्तिकम् । परब्रह्मासाधारण नित्यलोकाश्चि- च श्रुतिस्मृत्यादिप्रघुष्यमाणा न तर्कमात्रेणापदापितु शक्या, श्रौते- ऽर्थे यथाश्रुतिप्रतिपत्तेरेव न्याय्यत्वात् अन्यथा शास्त्रैकप्रमाणस्य ब्रह्मणो पि सर्वथैकेनापलाप प्रसङ्गाच्च, किम्बहुना - बादरिपक्षोपरि जैमि- न्युपक्षिप्ता स्सर्वएव दोषा स्सर्वएव स्वपक्षसमाधयश्च सम्भवत्येव । तस्मा त्परमव्योम विष्णुपदादिशब्दवाच्य स्थानविशेष, अर्चिरादि ना तत्रगतस्यैव च निश्शेषाविद्यानिवृत्ति, ब्रह्मप्राप्ति, अपुनरावृत्ति श्चेति सर्वं प्रामाणिकमेव, अतो बादरिपक्षो ऽयुक्तएव । एव परब्रह्मोपासकानेवा र्चिराद्यातिवाहिकगणो नयतीति जैमिनि

पक्षोप्ययुक्त , प्रत्यगात्मोपासकाना पञ्चाग्निविदाम प्यर्चिरादि गति श्रुते , प्रत्यगात्मोपासकानां तत्क्रतुन्यायेन प्रत्यगात्मप्राप्तेरेव युक्तत्वेपि ब्रह्मप्राप्तिश्रवणान्यथा नुपपत्त्या तेनैव न्यायेन तेषां पुरुषार्थभूत प्रत्यगात्मप्राप्ते र्ब्रह्मप्राप्तिगर्भता, तदीयप्रत्यगात्मोपासनस्य ब्रह्मोपासनगर्भताच कल्प्यते, यथा ब्रह्मोपासकाना ब्रह्मप्राप्ति स्वच्छरीरतया प्रत्यगात्मप्राप्तिगर्भा, तदीयब्रह्मोपासनच प्रत्यगात्मोपासनगर्भं । तृतीयाध्याय तृतीयपादस्थे शरीरे भावाधिकरणे द्वितीयसूत्रे प्रत्यगात्मनोपि मुक्तिदशाया प्राप्यता उपासनदशाया प्राप्याकारविशिष्टस्य तस्या नुसन्धेयताच सर्वब्रह्मोपासक साधारणी निरूपिता, चतुर्थाध्याय प्रथमपादस्थे द्वितीये आत्मत्वोपासनाधिकरणेपि स्वात्मानम् त्पात्मतयैव ब्रह्मण उपास्यता निर्णीता. चतुर्थाध्याय चतुर्थपादस्थे द्वितीये ऽविभागेन दृष्टत्वाधिकरणे मुक्तिदशाया परस्य ब्रह्मण स्स्वात्मनो ऽविभागेन प्राप्यताच समर्थयिष्यते । अतो यथा ब्रह्मोपासकाना प्रत्यगात्मन प्राप्ति रुपासन चास्ति , तथा प्रत्यगात्मोपासकानामपि ब्रह्मप्राप्त्युपासने प्रत्यगात्मप्राप्त्युपासनान्तर्भूते स्त । नचैव सति सर्वेषा ब्रह्मोपासकाना मात्मप्राप्ति ब्रह्मप्राप्त्यो रविशिष्टत्वे परब्रह्मोपासकानेव नयतीति वदता जैमिनिना किमपराद्धम् , तत्पक्षादस्मिन् पक्षे कोपि हि विशेषो नोपलभ्यते , पञ्चाग्निविदोपिहि यथोक्तरीत्या ब्रह्मोपासके ष्वेवान्तर्भूता भवन्तीति वाच्यम् । उभयेषा सामान्यतो ब्रह्मप्राप्तिफल ब्रह्मोपासननिष्ठत्वतौल्येपि प्रत्यगात्मपरमात्मलक्षण प्राधान्याप्राधान्यव्यवस्थया प्राप्यतारतम्यस्य दुरपह्नवत्वात् । ब्रह्मोपासकस्य हि ब्रह्मैव प्रधान प्राप्यम् , प्रत्यगात्मस्वरूपत्वप्रधानप्राप्यमेव । पञ्चाग्निविदस्तु प्रत्यगात्मस्वरूपमेव प्रधानप्राप्यम् , ब्रह्मत्वप्रधानप्राप्यमेव । अत प्राप्यभेदो दुर्वार । एतदुक्त भवति । भोग्यभोगोपकरण भोगस्थानादित्रिविधया नानाविध प्राप्यमस्ति । तत्र भोग्यविधया प्राप्यस्य प्रधानप्राप्यत्व । तदितरविधया प्राप्यस्याप्रधानप्राप्यत्व । परस्य

ब्रह्मणः भोगस्थानविधया प्राप्यत्वन्तु सर्वाधिकारिसाधारणं । प्रकृतिमण्डलोर्ध्वदेशावच्छिन्ने समन्ततः प्रदीप्तज्योतीरूपे परस्मिन्नेव ब्रह्मणि स्वस्वभोगप्रतिनियतावान्तरस्थानभेदे उभयेषां स्वस्वभोगानुभवात् । पंचाग्निविदामपि प्रकृतिविमुक्तप्रत्यगात्मलक्षणप्राप्यस्य प्रकृतिमण्डले प्राप्तुमशक्यस्य प्रकृतेः परस्तादेव प्राप्तव्यतया तत्रच ज्योतीरूपस्य परस्य ब्रह्मणः समन्ततः प्रदीप्ततया तदेव भोगस्थानम् । तत्र ब्रह्मनिष्ठानां भोग्यविधया प्राप्यमपि परमेव ब्रह्म, पंचाग्निविदान्तु प्रकृतिविमुक्तप्रत्यगात्मतत्त्वमेव, तथा प्रकृतिमण्डलोर्ध्वदेशावच्छिन्नस्य परस्य ब्रह्मणो भोगस्थानविधया प्राप्तिरेव चोभयविधाधिकारिसाधारणी स एनान् ब्रह्म गमयतीत्यादिषु शास्त्रे ध्वमानयायता प्रतिपाद्यते । भोग्यविधया स्वाभिमतप्राप्यप्राप्तिस्तु स्वस्वोपासनस्वभावैरनिर्धार्या । नामानवधानाहिता । भोग्यविधया प्राप्तिर्नाम स्वादुतमतयानुभूयमान तत्तद्वस्तुसन्निकर्षविशेषलक्षण प्रधानतमप्राप्तिरेव । तादृशीचप्राप्तिः उपासनदशायां यस्यैवप्रधानप्राप्यतयोपासन तस्यैव-नान्यस्य, तत्क्रतुन्यायात् । लोकेपि स्वभावतोमधुरेक्षपीयूषक्षौद्रगुडादिवस्तुषु कस्मैचित्कस्मैचिदेवरोचते, स्वस्ववासनानुगुणरुचिभेदवशात्र तत्पुरुष स्वस्वरुचिपरिगृहीतमेव वस्तु स्वादुतममनुभवति, नापरंमधुरतममपि वस्त्वनुभवितुं प्रयतते । तस्मात्प्रकृतिप्रत्यगात्मपरमात्मना प्रभूतानां तारतम्येपि प्राप्तिमि: स्वस्वरुचिभेदवशा दधिकारिणां तत्तत्परिग्रहोऽवतिष्ठते । तथाचैश्वर्यार्थिनामीदृशप्रधानतमप्राप्यत्व मचिद्वस्तुविशेषपर्यन्तं विलक्षणाचिद्वस्तुविशेषप्राप्तिलक्षणमैश्वर्यमेव तेषां पुरुषार्थं, प्रकृतिविमुक्त प्रत्यगात्मोपासकानां पञ्चाग्निविदां प्रकृतिविमुक्तप्रत्यग्लक्षण कैवल्य विशिष्टप्रत्यगात्मस्वरूपमेव तादृशप्राप्यमिति कैवल्यार्थिनां प्रत्यगात्मस्वरूपप्राप्तिरेव तेषां पुरुषार्थः, ब्रह्मनिष्ठानां भगवानेव तादृशप्राप्य इति भगवत्प्राप्तिरेव तेषां पुरुषार्थः, उपासकानां गुणतारतम्यापन्न तत्त्व-

विशेषविषयक प्राथमिकरुचिवैचित्री निबन्धनेयं पुरुषार्थवैचित्रीक्लृप्ति । अल्पास्थिरत्वा ऽस्थिरत्वा ऽनन्तस्थिरत्वादिकं तत्तत्स्वभावनिबन्धनं । प्रकृतितत्त्वस्य क्षरणशीलतया गुणत्रयमयत्वाच्च तत्प्राप्तिलक्षणस्यैश्वर्यपुरुषार्थस्यानित्यत्व मल्पत्वम् प्राप्यस्यानित्यतया तदर्थिनां पुनरावृत्तिश्च सम्भवति । प्रकृतिविप्रयुक्तप्रत्यगात्मस्वरूपस्य नित्यतया तत्प्राप्तिलक्षणस्य कैवल्यपुरुषार्थस्य नित्यत्वम् प्रत्यगात्मनो ज्ञानानन्दमयतया प्रकृतितत्त्वा त्सुदूरव्यावृत्तत्वेपि परिच्छिन्नस्वरूपगुणतया भगवत स्सुदूरापकृष्टतया तत्प्राप्तिलक्षण परमानन्दा द्दल्पतमरत्वं च सम्भवति । भगवच्छब्दितस्य परब्रह्मतत्त्वस्य त्रिविधपरिच्छेदरहितस्वरूपतया ऽत्यद्भुतदिव्यरूपतया ऽनवधिकातिशया संख्येयकल्याणगुणगणौघ महार्णवतया ऽपरिच्छिन्नोभय विभूत्यैश्वर्यसम्पन्नतयाच तत्प्राप्तिलक्षणस्य परमपुरुषार्थस्य स्थिरत्व मनन्तत्वंच सम्भवति । कैवल्यपुरुषार्थनिष्ठानां पञ्चाग्निविदां भगवत्प्राप्तिलक्षणपरमपुरुषार्थनिष्ठानां परब्रह्मनिष्ठानां चोभयेषां प्राप्यवस्तुस्थानान्नित्यतानिबन्धन मपुनरावृत्तिरेव त्येकरूपमेव । अतएव चोभयेषा मपुनरावृत्तिहेतु रर्चिरादिलक्षणा गतिरेका श्रूयते । इत्थं तत्त्वत्रयस्वभाववैचित्रीवशेनैव तत्प्राप्तिलक्षण पुरुषार्थवैचित्रीसम्भवा त्पंचाग्निविदां ब्रह्मनिष्ठानाञ्च प्राप्यपुरुषार्थभेदो ऽवश्यमेवाभ्युपेयः । अन्यथा सुदूरमपि गत्वा तद्यइत्थं विदु र्येचेमेऽरण्ये श्रद्धातप इत्युपासत इत्यादिश्रुत्या पंचाग्निविदः परब्रह्मोपासकांश्च विभज्य निर्दिश्या र्चिरादिगति मब्रह्म प्राप्त्यपुनरावृ त्युपदेशासांगत्यस्य परिहर्तु मशक्यत्वात । अस्या श्श्रुतेश्च परमप्राप्यभूते कवस्तुपर्यवसाय्यगतिभावपन्नोपासननिष्ठ द्विविधाधिकारिविषयत्वं वा कार्यब्रह्मान्तर्भूतभिन्नभिन्नद्विविधप्राप्यपर्यवसायि द्विविधोपासननिष्ठ द्विविधाधिकारिविषयत्वं वा नसम्भवतीति च प्रागेव निरूपितम् । प्राप्यपुरुषार्थभेदमन्तरेणोपासनाकारवैचित्रीमात्रेण तथोपदेश इत्यपिच नसुवचम् । तथा

समन्ततः आकाशवत्प्रदीप्तमपि सर्वत्र नैकविधानंदहेतु परिकर-विशिष्टं वर्तते, अपितु – तत्तदुपासकोपासनानुगुण्येन तत्र तत्र-परस्परविलक्षण नानाविध भोग्य भोगोपकरण भोगस्थानादिलक्षण नानापरिकरविशिष्टवेषेण ताहशपरिकराविशिष्टवेषेणच पूर्दामं वर्तते। ताहशपरिकराविशिष्टवेषेण वर्तमान ब्रह्मप्रदेशविशेषे विलक्षणानन्दहेतु परिकरविशेषविशिष्ट ब्रह्मप्राप्तिलक्षण परिपूर्ण ब्रह्मप्राप्त्यभावा त्म-हतिनभसि खद्योतवत्परस्मिन् ब्रह्मणि स्वात्मानुभव प्रतिनियते ताहश-प्रदेश विशेषे स्वाच्छन्द्येन प्रवर्तमानानां प्रकृतिवियुक्तस्वस्वरूपा पत्त प्रत्यगात्मनां स्वात्मानुभवानंदमात्रतृप्तत्वलक्षण कैवल्य मोक्षएव पुरुषार्थः, ताहशपरिकरविशेषविशिष्ट ब्रह्मप्रदेशविशेषे प्रवर्तमानानां परब्रह्म-निष्ठानांच परिपूर्ण ब्रह्मप्राप्ति लक्षण परम मोक्षएव पुरुषार्थ इति पुरुषार्थतारतम्यंहि सुवचम्, प्रकृतिमण्डलात्परस्तात्समन्ततः प्रदीप्तस्यापि परस्य ब्रह्मणो नैकविधा प्राप्ति र्दृश्यते। नाहिखल्वर्चिरादि मार्गेणगतानां परब्रह्मोपासकानामपि लोकविशेषप्राप्ति-र्लोकविशेषे प्रविष्टोन्मादक नगरोद्यानविमानक्रिडोद्देशविशेषादि प्राप्ति स्सकलेतरपदार्थविस्मारक निरवधिक सुखसन्दोहात्मकानुभव विशेषहेतु भगवद्दिव्यमंगळ विग्रह तच्चरणारविन्द तत्कटाक्ष प्रासादिप्राप्तिश्चैकरूपा संप्रतिपन्ना। तत्तद्वस्तुगतस्वाभाविकानुकूलत्वाकाराणां तारतम्यंहि स्वतस्सिद्धम्। नहि ब्रह्मस्वरूपगुणविग्रहादिगत मनुकूलतमत्व दिभूतिभूतेषु प्रकृत्यादिषु प्रामाणिकं। यथाच निश्शेषाविद्यानिवृत्ति र्देशविशेष कालविशेषादिसापेक्षा, तथैव तत्त-द्वस्तुगतानुकूलत्वातिशयविषयकानुभव विशेषोपि स्थानविशेषतत्त द्वस्तुसन्निकर्षविशेषादिसापेक्ष एव। प्रकृतितत्त्वनिबन्धनै श्वर्यपुरुषार्थिनामपिहि प्रकृति तत्त्वस्य सर्वत्रैकत्वेपि न लोकविशेषप्राप्त्य-प्सरःप्राप्त्योस्तुल्यरूपताहष्टा। नहीह्लोक एव हिरण्यगर्भैश्वर्य प्राप्तिस्संभवति। तथाच, प्रकृतिमण्डल ऐश्वर्यविशेषप्राप्ति र्यथा स्थानभेदसापे-

परब्रह्मोपासकानां स्वप्राप्यस्य परस्य ब्रह्मण स्सर्वगतत्वेन त-
त्प्राप्तये क्वचिद्गमनानौचित्यात् अर्चिरादिमार्गं गन्तृणां प्राप्यस्य
बहुवचनान्तब्रह्मलोकशब्देन स्थूलवस्तुमय लोकविशेषादिरूपतया-
प्रतिपादनात् परब्रह्मोपासकानां तथाविधवस्तुप्राप्त्ययोगात् हिरण्य
गर्भलक्षणकार्यब्रह्मोपासकानामेव तत्सम्भवाच्च हिरण्यगर्भलक्षणकार्यब्र
ह्मोपासकविषयैव गति श्रुतिरिति बादरि तात्पर्यनिष्कर्ष ॥ २ ॥

ब्रह्मशब्द मुख्यवृत्ति प्रमाणायोगात् तद्बलेन समानप्रकरण
स्थ बहुवचनान्त ब्रह्मलोक शब्दस्य समानाधिकरणसमासतया ब्र-
ह्मपरतासम्भवात् पादाधिकरणन्यायेन बहुवचनार्थ विवक्षासम्भवा
त् परब्रह्मासाधारण लोकविशेषाणामपि मुक्तप्राप्यानां प्रामाणिकत-
या तद्विषयतया षष्ठीसमासस्यापि सम्भवात् ब्रह्मणस्सर्वगतत्वे प्य-
विद्यानिवृत्तिपूर्वक तत्प्राप्ते वर्णाश्रमधर्म शौचाचारकालविशेषादि सापे
क्षत्ववत् देशविशेष सापेक्षताया अपि प्रमाणप्रतिपन्नाया दुरपह्नवाच्च
च्छ्रौतेर्थे यथाश्रुत्यैव प्रतिपत्त्युपपत्त्याच्च परब्रह्मोपासक विषयैव ग-
तिश्रुतिरिति जैमिनि तात्पर्यनिष्कर्ष ॥ ३ ॥

अनयो र्बादरिजैमिनिपक्षयो तद्य इत्थं विदुर्येचमेऽरण्ये श्र
द्धा तप इत्युपासतइत्यादिश्रुतौ अर्चिरादिपथगामिना द्विधा विभज्य
निर्देश स एनान् ब्रह्म गमयतीति प्राप्यैक्य श्रवणेन कार्यब्रह्म पर
ब्रह्मणा रेकविध प्राप्योपासकेष्वेव पूर्वापरभावापन्नांगांगि भूतोपा
सन पर्वद्वयनिष्ठ द्विविधाधिकारि तात्पर्यकतयावा उपासनाकार भेद
मात्राधीन द्वैविध्यतात्पर्यकतयावा उगत्या नेयइ येषा भिप्रेतम् ॥ ४ ॥

तद्य इत्थंविदुरित्यादि श्रुते पूर्वापरभावापन्नांगांगिभूतो
पासननिष्ठ द्विविधाधिकारिपरत्वे तादृश द्विविधाधिकारिणा मध्ये
एकविधाधिकारिणा मर्चिरादिगत्युपदेशमात्रेण द्विविधाधिकारिणाम.
पि तत्सिद्ध्या द्विविधाधिकारिणा विभज्य निर्देशपूर्वक गत्युपदेश

स्य निरर्थकत्वात् उपासनाकार भेदमात्राधीन द्विविध्याभिप्रायक त्वेच अनेकानां ब्रह्मविद्यानां विविध विचित्र नानास्थानाकार विशेषणादि भेदभिन्नानां सत्वेन तन्निष्ठान् पृथक्पृथग्भेदेना निर्दिश्य – पंचाग्निविद्यालक्षणैक विद्यानिष्ठान् परं पृथक् निर्दिश्य तेषा मर्चि रादिगत्युपदेशे कारणाभावा त्पंचाग्निविद्याया इतरपरविद्याभि स्तु ल्यप्राप्यकत्वे तासामिवास्याअपि येचेमेरण्ये श्रद्धातप इत्युपासत इ त्यनेनैव संग्रह सम्भवेन पृथक् निर्देशस्य कथंचिद् – पि प्रयोजन वत्त्वासम्भवाच्च दर्शित श्रुतेः सुदूरमपि गत्वा परस्परविभिन्नप्राप्योपास्यक विलक्षणविद्यानिष्ठ द्विविधाधिकारि विषयत्वस्यावश्याभ्युपगन्तव्यत्वात् , सएनान् ब्रह्मगमयतीति प्राप्यैक्य निर्देशस्य उभयसाधारणावान्तर प्राप्यैक्यविषयतयापि निर्वाहसम्भवाच्च तद्य इत्थं विदुरितिनिर्दिष्टाः पञ्चाग्निविदः कैवल्य पुरुषार्थ फलक प्रकृतिवियुक्त ब्रह्मात्मक प्रत्यगात्मोपासननिष्ठा एवाधिकारिणः , येचेमेरण्येश्रद्धातप इत्युपासत इति निर्दिष्टाः भगवत्प्राप्तिलक्षण परमपुरुषार्थफलक परब्रह्मोपासननिष्ठा अधिकारिण इति स्वीकृत्य ताद्दशद्विविधाधिकारिपरत्वमेवास्याभ्युते र्वाच्यमिति भगवतो बादरायणस्य तात्पर्यनिष्कर्ष. ॥ ५ ॥

दर्शिता र्थानुगुण्येन दर्शिताधिकरणसूत्राभिप्रेतानुमानानां प्रयोगाऽपि बोद्धव्य इति ॥ १६० ॥

इति श्री शारीरक मीमांसा महार्णवांतः पातिनि

श्रीशेषानन्तपूरुष श्रीरङ्गाचार्य विरचित कार्याधिकरणवादकल्लोले

सिद्धांतार्थाभिधान नामा

## ॥ प्रथमस्तरंगः ॥

---